द्वारभेदादिवस्तूनामिन्द्रध्वजविचेष्टितम् ।
मासे सार्धतृतीयेषु त्रिषु वाऽथ विपच्यते ॥
अधर्मस्यातिवृद्धिस्तु त्रिभिर्वर्षैर्विपच्यते ।
अनुक्तेष्वपि चान्येषु फलं संवत्सरात् परम् ॥
दिव्यान्तरिक्षभौमानामुत्पातानां समुद्भवे ।
विना शान्तिफलं तेषां पाककाले निवर्त्तते ॥
पुरपौरनृपाचार्यकोषवाहनमन्त्रिणाम् ।
युगपत् स्याद्विनाशाय संचयस्तु त्रिमासिकः ॥
दिव्यान्तरिक्षक्षितिजा उत्पाताः समुपस्थिताः ।
सप्तरात्रान्तरे दृष्ट्वा विद्याभिश्चोपशाम्यति ॥

गार्गीये ।

पक्षाद्विपाकः सूर्यस्य पाकः सोमस्य मासिकः ।
मासद्वयात् स्मृतो राहोर्विपाको नात्र संशयः ॥
अथ चेदयनं कुर्यादष्टमासेषु पच्यते ।
त्रिभिर्मासैस्तु भौमस्य षण्मासं बुधगीष्पतौ ॥
षण्मासिकस्त्वौशनसो सौरीयस्त्वथ पञ्चभिः ।
त्रिभिर्मासैर्विपाकस्तु नियतं धूमकेतवे ॥
श्वेतस्य सप्तरात्रेण बुधे यावत् तु दर्शनम् ।
संवत्सरविपाकस्तु ज्ञेयौ सूर्यबृहस्पतेः ॥
त्रिभिर्मासैस्तु भौमस्य उल्कापातस्य मासिकः ।
अष्टाभिर्भूमिकम्पस्तु निर्घातः पच्यते त्रिभिः ॥
अनार्त्तवं पुष्पफलं षड्भिर्मासैर्विपच्यते ।
पक्षिकीटपतङ्गानां दशाहात् फलमादिशेत् ॥

व्यभ्रवृष्टिर्भवेन्मासाद्गन्धर्वनगराणि च ।
पुरचैत्यादिभङ्गेषु फलं मासाद्विपच्यते ॥
छत्रध्वजनिमित्तेषु रथतोरणवेश्मसु ।
भूकम्पपांसुवर्षेषु अनभ्रस्तनितेषु च ॥
ग्रहाणां परिवेषेषु त्रिरात्रफलमादिशेत् ।
घृततैलवसावर्षे सद्यः फलमुदाहृतम् ॥
अरिष्टं षट्सु मासेषु पच्यते कलहं त्रिषु ।
हिरण्यविक्रियायां तु फलं मासाद्विपच्यते ॥
अथो कलिविपर्यास उत्सवक्रियया सह ।
अचलानां च चलने षण्मासात् फलमादिशेत् ॥
मूषिकाकीटसर्पाणां मक्षिकानां तथैव च ।
दर्शने स्वतिमात्रेषु फलं त्रैमासिकं भवेत् ॥
रात्राविन्द्रधनुर्दृष्ट्वा राज्ञः शीलविपर्ययम् ।
कबन्धकीलयोः सूर्ये सप्ताहात् फलमादिशेत् ॥
वानराणां नराणां च तथैव गजवाजिनाम् ।
नानावादित्रशब्दानां फलं मासाद्विपच्यते ॥
गृध्रगोमायुसङ्घानां फलं मासाद्विपच्यते ।
विडालनकुलानां च वराहव्याघ्रयोस्तथा ॥
श्रुत्वाऽन्तरिक्षे शब्दांस्तु फलं मासाद्विपच्यते ।
सग्रहो यस्य नक्षत्रे चन्द्रमाः परिपच्यते ॥
पीड्यते तत्र नृपतिः शस्त्रत्रासश्च जायते ।
सग्रहो यस्य नक्षत्रे सोमो ग्रस्येत राहुणा ॥
सराष्ट्रः सपुरो राजा क्षिप्रमेव विनश्यति ।

गृहीते राहुणा सोम उल्कापातो भवेद्यदि ॥
षण्मासाभ्यन्तरे तत्र नगराद्भ्रश्यते नृपः ।
चन्द्रः प्रतिमुखे तिष्ठन् सग्रहो यत्र दृश्यते ॥
सर्वधान्यानि शुष्यन्ति जातं जातं विनश्यति ।
कृत्वा शस्त्रं च रोगं च अनावृष्टिस्तथैव च ॥
उपद्रवश्च भूतानां भिन्ने सोमे प्रदृश्यते ।

कस्य चित्* ।

पक्षाद्विपाकः सूर्यस्य सोमस्य मासिकस्तथा ।
धूमकेतोस्त्रिभिर्मासैर्विद्यात् पाकं न संशयः ॥
भूमिकम्पोऽष्टमे मासि नौभेदः पच्यते त्रिभिः ।
पक्षिकीटपतङ्गानां दशाहात् फलमादिशेत् ॥
व्यभ्रे दृष्टे भवेन्मासैर्गन्धर्वनगरे त्रिभिः ।
पुरचैत्यवृक्षभङ्गे फलं मासाद्विपच्यते ॥
"ग्रहाणां परिवेषेषु त्रिरात्रात् फलमापतेत् ।
घृततैलवसावर्षे सद्यः फलमुदाहरेत् ॥
अनग्निज्वलने चैव कष्टं फलमुदाहृतम् ।
अरिष्टं षट्सु मासेषु पच्यते हि फलं त्रिषु ॥
हिरण्यविक्रियायां तु फलं मासाद्विपच्यते ।
अचलानां च चलने षण्मासात् फलमादिशेत् ॥
मूषिकाकीटसर्पाणां मक्षिकायास्तथैव च ।
रात्राविन्द्रधनुर्दृष्ट्वा राष्ट्रे शीलविपर्ययः ॥
कबन्धशीर्षयोः सूर्ये सप्ताहात् फलमादिशेत् ।

* अत्र नामानुल्लेखात् कस्य चिदिति ।

वानराणां नराणां च तथैव गजवाजिनाम् ॥
नानावादित्रशब्दानां फलं मासाद्विपच्यते ।
विडालनकुलानां च वराहव्याघ्रयोस्तथा ॥
श्रुत्वाऽन्तरिक्षे शब्दं तु फलं मासाद्विपच्यते ।
सग्रहो यस्य नक्षत्रे चन्द्रमाः परिविष्यते ॥
पीड्यते तत्र नृपतिः शस्त्रग्रामश्च जायते ।
सग्रहो यस्य नक्षत्रे सोमो ग्रस्येत राहुणा ॥
सराष्ट्रः सपुरो राजा क्षिप्रमेव विनश्यति ।
गृहीते राहुणा सोमे उल्कापातो भवेद्यदि ॥
षण्मासाभ्यन्तरे तत्र नगराद्भ्रश्यते नृपः ।
चन्द्रः प्रतिमुखस्तिष्ठन् सग्रहो यत्र दृश्यते ॥
सर्वधान्यानि शुष्यन्ति जातं जातं च नश्यति ।
कृत्वा शस्त्रं च रोगं च अनावृष्टिं तथैव च ॥
उपद्रवश्च भूतानां भिन्ने सोमे प्रदृश्यते"* ।
यदा त्वेते न पच्यन्ते यथाकालप्रचोदिताः ॥
तदा द्विगुणकाले च फलं विद्याच्छुभाशुभम् ।

बृहत्संहितायां वराहः ।

"पक्षाद्भानोः सोमस्य मासिकोऽङ्गारकस्य वक्रोक्तः ।
आदर्शनाच्च पाको बुधस्य जीवस्य वर्षेण ॥
षड्भिः सितस्य मासैरब्देन शनेः सुरद्विषोऽब्दार्धात् ।
वर्षात् सूर्यग्रहणे सद्यः स्यात् त्वाष्ट्रकीलकयोः ॥
त्रिभिरेव धूमकेतोर्मासैः श्वेतस्य सप्तरात्रान्ते ।

* 'ग्रहाणामित्यारभ्य........प्रदृश्यते' इत्यन्ताः श्लोकाः पुनरुल्लेखिताः बहूनां वचनानां साम्यान्न दोषाय ।

सप्ताहात् परिवेषेन्द्रचापसन्ध्याभ्रसूचीनाम् ॥
शीतोष्णविपर्यासः फलपुष्पमकालजं दिशां दाहः ।
स्थिरचरयोरन्यत्वं प्रसूतिविकृतिश्च षण्मासात् ॥
अक्रियमाणककरणं भूकम्पोऽनुत्सवो दुरिष्टं च ।
शोषश्चाशोष्याणां स्रोतोऽन्यत्वं च वर्षार्धात् ॥
स्तम्भकुशूलार्चानां जल्पितरुदितप्रकम्पितस्वेदाः ।
मासत्रयेण कलहेन्द्रचापनिर्घातपाकाश्च ॥
कीटाखुमक्षिकोरगबाहुल्यं मृगविहङ्गविरुतं च ।
लोष्टस्य चाप्सु तरणं त्रिभिरेव विपच्यते मासैः ॥
प्रसवः शुनामरण्ये वन्यानां ग्रामसम्प्रवेशश्च ।
मधुनिलयतोरणेन्द्रध्वजाश्च वर्षात् समधिकाद्वा ॥
गोमायुगृध्रसङ्घा दशाहिकाः सद्य एव तूर्यरवः ।
आक्रुष्टं पक्षफलं वल्मीको विदरणं च भुवः ॥
अहुताशप्रज्वलनं घृततैलवसादिवर्षणं चापि ।
सद्यः परिपच्यन्ते मासेऽध्यर्धे च जनवादः ॥
छत्रचितियूपहुतवहबीजानां सप्तभिर्भवति पक्षैः ।
छत्रस्य तोरणस्य च केचिन्मासात् फलं प्राहुः ॥
अत्यन्तविरुद्धानां स्नेहः शब्दश्च वियति भूतानाम् ।
मार्जारनकुलयोर्मूषकेण सङ्गश्च मासेन ॥
गन्धर्वपुरं मासाद्रसवैकृत्यं हिरण्यविकृतिश्च ।
ध्वजवेश्मपांशुधूमाकुला दिशश्चापि मासफलाः ॥
नवकैकाष्टदशकैकषट्त्रिकत्रिकसङ्ख्यमासपाकानि ।
नक्षत्राण्यश्विनिपूर्वकाणि सद्यःफला श्लेषा ॥

पित्र्यान्मासः षट् षट् त्रयोऽर्धमष्टौ च त्रिषडेकैकाः ।
मासचतुष्केऽषाढे सद्यःपाकाऽभिजित्तारा ॥
सप्ताष्टावध्यर्धं त्रयस्त्रयः पञ्च चैव मासाः स्युः ।
श्रवणादीनां पाको नक्षत्राणां यथासङ्ख्यम् ॥
निगदितसमये न दृश्यते चेदधिकतरं द्विगुणे प्रपच्यते तत् ।
यदि न कनकरत्नगोप्रदानैरुपशमितं विधिवद्द्विजैश्च शान्त्या"*॥

मयूरचित्रे ।

लोष्टस्य चाप्सु तरणं त्रिभिरेव विपच्यते ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः ।

"अद्भुतेऽत्र समुत्पन्ने यदि वृष्टिः शिवा भवेत् ।
सप्ताहाभ्यन्तरे ज्ञेयमद्भुतं निष्फलं हि तत्"† ॥

वटकणिकायाम् ।

यदि निर्विकारमम्भः पर्यन्यस्त्यजति सप्ताहात् ।
प्रशममुपगच्छति तत् त्रिविधोत्पाते समादेशः ॥

इति श्रीमहाराजाधिराजनिःशङ्कशङ्करश्रीमद्बल्लालसेनदेवविरचिते-
ऽद्भुतसागरे पाकसमयाद्भुतावर्त्तः ।

इत्यद्भुतसागरः समाप्तः ।

श्रीरस्तु शुभमस्तु ॥



---

* सर्वत्रास्मिन् ग्रन्थे बृहत्संहितायां वचनानां प्रमाणत्वादत्र प्रायस्त्रुटितवचनानवगम्य तस्याः (बृहत्संहितयाः) स्तान्युद्धृत्य रक्षितानि ।

† २२९ अ. १०-११ श्लो. ।

